किं वेयं रुचिरस्ति मित्रहृदयाह्लादप्रदानोद्यता
सौभाग्यैकमयीं विलोक्य विबुधैर्यन्मूर्तिमित्युच्यते ॥६२॥

यन्मूर्तिं, किं०, सौभाग्यैकमयीं केवलसौभाग्यशालिनीं, विलोक्य, विबुधैः पण्डितैः, इति पूर्वपदत्रयीवर्णितं यथा, इति उच्यते, इति क्रियाकारकसंपर्कः । तदेवाह—इयं किं लक्ष्मीः?, तत्र हेतुमाह—किं०, पुरुषोत्तमप्रणयिनी, मूर्तिपक्षे पुरुषोत्तमा नरोत्तमाः शाहिश्रीमदकब्बरप्रभृतयस्तेषां प्रणयिनी वल्लभा, पक्षे पुरुषोत्तमो नारायणस्तस्येति, पुनः, किं पार्वती ?, किं०, वामदृग् मनोज्ञनयना मनोज्ञदर्शना वा, पक्षे वामे महेश्वरे दृग् दृष्टिर्यस्याः सेति; पुनरियं किं ब्राह्मी ?, किं०, कवीनां पण्डितानां, तुष्टिकृत्, पक्षे कवेर्विधातुस्तत्पुत्रीत्वादिति, पुनरियं किं शची ?, किं०, शश्वत् सततं वृषस्य धर्मस्य उल्लासिनी, पक्षे वृषा शक्रस्तस्येति, वाऽथवा, इयं किं रुचिरस्ति ?, अस्तीति क्रिया सर्वत्र योज्यते, किं०, मित्राणां सुहृदां, हृदयाह्लादप्रदाने उद्यता उत्सुका, पक्षे मित्रस्य सूर्यस्य तत्कलत्रत्वादिति; शेषं सुगमम् ॥ ६२ ॥

मूर्तिर्यस्य गुरोर्निकामसुभगाऽस्त्यानन्दकन्दाङ्कुरः
किञ्चात्रैव मनोज्ञसङ्गतिरयं रम्यो गुणानां गणः
योगं रत्नसुवर्णयोरिव सृजन् धाताऽनयोर्दूषणं
स्वीयं रत्नविडम्बकोऽयमिति यद् विज्ञः पिधत्ते स्म तत्॥६३

यस्य गुरोर्मूर्तिर्निकाममत्यर्थं सुभगा अस्तीत्यन्वयः । अत एव किं०, आनन्दकन्दाङ्कुरः सर्वेषामप्याह्लादहेतुत्वात्, किञ्च, अत्रैव मूर्तौ शरीरे, अयं गुणानां ज्ञानादीनां व्यावर्णितस्वरूपाणां, गणो रम्यो रुचिरोऽस्तीति, किं०, मनोज्ञसङ्गतिस्तुल्यसङ्गम इति, अतः कारणात्, अनयोर्गुरुमूर्तिगुणगणयोः

रत्नसुवर्णयोरिव योगं संबन्धमेकाधिकरण्यलक्षणं, सृजन् कुर्वन्, धाता वेधाः, रत्नविडम्बकः "रत्नदोषी विधाता" इति स्वीयं दूषणं यद् वर्तते, तयमिति निश्चः किं तत् पिधत्ते स्मा॑ऽऽच्छादयति स्म ?, इति स्वं कलङ्कं किं निराकरोत् ?, इति तत्त्वम् ॥ ६३ ॥

अथ गुरोः सर्ववर्णनपूर्वकमाशीर्वादमन्नथाह-

पुरे पुरे भूरिमहेभ्यसभ्य-
वदान्यराजन्यकराजमान्यैः ।
जनैः कृताऽतुच्छमहोत्सवौघै-
र्धन्यैरजन्यैरभिगम्यमानः ॥ ६४ ॥

पुरे पुरे तुम्बुरुकिंनरस्वरै-
र्गान्धर्ववर्गैः कृतगीतगानः ।
पुरे पुरे पौरमहीमहेन्द्रैः
प्रदीयमानाऽनभिमानमानः ॥ ६५ ॥

संस्तूयमानोऽनघसङ्ख्लोकै-
रिवाऽब्जिनीशोऽखिलवालिखिल्यैः ।
अभ्यर्चितः काञ्चनरूप्यपुष्प-
रूपैः सुरूपैः सुरवृक्षवच्च ॥ ६६ ॥

श्रीभारतं खण्डमखण्डमेतत्
प्रोल्लासयन् पङ्कजिनीशितेव ।
तमो हरन् विश्वगतं समन्ता-
च्चिरं जयत्येष गुरुर्गरीयान् ॥ ६७ ॥

गुरुः किं०, पुरे पुरे नगरे नगरे, स्थाने स्थाने वा, किं०, भूरिमहेभ्या बहुधनाढ्याः, पुनः, सभ्याः सभास्तारः, पुनः,

वदान्या दानशीलाः, पुनः, राजन्यका राजसमूहा राजवर्गीणां वा, पुनः, राजमान्या अमात्यश्रेष्ठ्यादयस्तैः, किं०, कृता अतुच्छा महोत्सवौघा यैस्तैः, अत एव धन्यैः पुण्ययुतैः, पुनः, अजन्यैः अकलहैः, अभिगम्यमानः सेव्यमान इति ॥ ६४ ॥

पुनः, पुरे पुरे गान्धर्ववर्गैर्गायनगणैः, किं०, तुम्बुरुकिन्नरौ देवगायनोत्कृष्टौ तयोरिव स्वरो येषां तैः, कृतं गीतगानं यस्य सः, पुनः, पुरे पुरे पौरैर्नागरैर्महीमहेन्द्रैश्च राजभिः, प्रदीयमानमनभिमानं निरहङ्कृति मानं पूजा यस्य सः ॥ ६५ ॥

पुनः, वालिखिल्यैः सूर्यबन्दिविशेषैः, अब्जिनीशः सूर्य इव, अनघसङ्कुलोकैः संस्तूयमानः, च पुनः, गुरुः किं०, सुरवृक्षवत् काञ्चनरूप्याणां यानि पुष्पाणि रूपाणि च नाणकानि तैः, काञ्चनरूप्यपुष्परूपैः, किं०, सुरूपैः रम्यैः, अभ्यर्चितः पूजित इति॥६६॥

पुनः, श्रीभारतं खण्डं भरतार्धम्, अखण्डं यथा स्यात् तथा, पङ्कजिनीशितेव सूर्य इव, प्रोल्लासयन्, पुनः, विश्वगतं जगद्वर्ति तमो ध्वान्तं पापं च, समन्तात् सर्वतः, हरन्, एष गुरुः श्रीविजयसेनसूरिः, चिरं जयतीति । अत्र वर्तमानार्थविभक्तेः प्रयोगाद् गुरौ समीपवर्तिनि सत्येष ग्रन्थः पूर्णीकृत इति सूचितम् ॥ चतुर्णां व्याख्या ॥ ६७ ॥

अथाऽस्य काव्यस्याऽऽशीर्वादावसरः—

श्रीहीरहीरविजयाभिधसूरिसिंह-
श्रीपट्टभृद्विजयसेनमहामुनीन्दोः ।
सौभाग्यपद्धतिरियं मुदितं करोतु
चेतः सतां शशिकलेव चकोरकाणाम् ॥६८॥

श्रियां गच्छैश्वर्यरूपलक्ष्म्यां हीरो मणिरिव श्रीहीरो यो हीरविजयाभिधः सूरिसिंहस्तस्य यः श्रिया युक्तः पट्टभृत् श्रीपट्टधारी विजयसेनो नाम्ना महामुनिषु इन्दुरिव यस्तस्य श्री-

हीरहीरविजयाभिधसूरिसिंहश्रीपट्टभृद्विजयसेनमहामुनीन्द्राः, इयं विजयप्रशस्तिनाम्नी सौभाग्यभङ्गी शास्त्रपद्धतिः, चकोरकाणां शशिकलेव, सतां पण्डितानां सज्जनानां वा, चेतो मुदितं हर्षितं करोत्वित्याशीः ॥ ६८ ॥

पुनरप्याशिषं दिशति

श्रीसूरिराड्विजयसेनमुनीन्द्रचन्द्र-
माहात्म्यवर्णनविधाननिधानभूमिः ।
नानामनोज्ञनरतुङ्गरसाभिरामा
भूयादियं विजयिनी विजयप्रशस्तिः ॥६९॥

श्रिया युक्तो यः सूरिराट् विजयसेनमुनीन्द्रचन्द्रस्तस्य यन्माहात्म्यवर्णनाविधानं तदेव निधानं तस्य भूमिरिव भूमिः, इयं विजयप्रशस्तिः, कीदृशी, नानाप्रकाराः पुनर्मनोज्ञनरा रम्यनराः, पुनः, तुङ्गा महान्तो ये रसाः, ग्रन्थपक्षे शृङ्गारादयः, भूमिपक्षे रसा मधुरादयः, तैः अभिरामा चार्वी नानामनोज्ञनरतुङ्गरसाऽभिरामा, विजयिनी विजयवती, भूयात् सर्वोत्कर्षेण वर्ततामिति॥६९॥

अथ निजग्रन्थाशीर्वादमाह

यावद् व्योमपथाध्वगौ विचरतः श्रीपुष्पदन्ताविमौ
यावद्वारिधिरन्तरीपकमलां धत्ते धरित्र्याः पुनः ।
यावत् स्वर्गसदां गिरिश्च भुवनाम्भोजे भवेत् कर्णिका
तावत् काव्यमिदं सदा विजयतां कुर्वत् सतां मङ्गलम् ।७०।

यावत्कालम्, इमौ पुष्पदन्तौ सूर्याचन्द्रमसौ, किं०, व्योमपथाध्वगौ नभःपथपथिकौ, विचरतो भ्राम्यत इति, पुनः, यावद् वारिधिः समुद्रः, धरित्र्याः पृथ्व्याः, अन्तरीपकमलां निवसन-श्रियं, धत्ते धरति, च पुनः, यावत् स्वर्गसदां देवानां, गिरिरर्थाद्

मेरुः, भुवनाम्भोजे जगत्कमले, कर्णिका भवेत्, पद्मनालतामालम्बते, तावत्कालम्, इदं विजयप्रशस्तिनामकं, काव्यं सतां पुंसां, मङ्गलं कल्याणं, कुर्वत्, सदा नित्यं, विजयतां शाश्वतं विजयवद् भूयादिति भावार्थः ॥ ७० ॥

• • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • •

इतीति समस्तं पाठसिद्धम् ।

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुण्डरीकप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां सुखावबोधिकायां श्रीविजयप्रदीपिकाभिधानधारिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायामेकविंशः सर्गोऽर्थतः समर्थितः ॥

तत्समाप्तौ च समाप्ता श्रीविजयप्रशस्तिमहाकाव्यवृत्तिः ।

